# तत्त्वोपदेशः ।

श्रीपरमहंस परिव्राजकाचार्य्य - श्रीमच्छङ्कर

भगवत्कृततत्त्वोपदेशः ।

श्रीयुक्तबाबु भुवनचन्द्र वसाक महोदयस्य

प्रार्थनाया

श्रीयुक्त नवचन्द्र शिरोमणिना परिशोधितः ।

८ नं निमतला घाट ष्ट्रीटस्थ

श्रीयुक्तबाबु भुवनचन्द्र वसाकेन प्रकाशितः ।

कलिकाता नगर्य्याम्

८ नं निमतला घाट ष्ट्रिटस्थ

संवादज्ञानरत्नाकराख्ययन्त्रे श्रीभुवनचन्द्र वसाकेन

मुद्रितः ।

१८८९

# तत्त्वोपदेशः ।

श्रीपरमहंस परिव्राजकाचार्य्य - श्रीमच्छङ्कर

भगवत्कृतस्तत्त्वोपदेशः ।

श्रीयुक्तबाबु भुवनचन्द्र वसाक महोदयस्य

प्रार्थनाया

श्रीयुक्त नवचन्द्र शिरोमणिना परिशोधितः ।

---

८ नं निमतला घाट ष्ट्रीटस्थ

श्रीयुक्तबाबु भुवनचन्द्र वसाकेन प्रकाशितः ।

कलिकाता नगर्य्याम्

८ नं निमतला घाट ष्ट्रिटस्थ

संवादज्ञानरत्नाकराख्ययन्त्रे श्रीभुवनचन्द्र वसाकेन

मुद्रितः ।

१८८७

श्रीश्रीगुरवे नमः ।

# तत्त्वोपदेशः ।

श्रीमच्छङ्करोक्तिः ।

तत्त्वं पदार्थशुद्ध्यर्थं गुरुः शिष्यं वचोऽब्रवीत् ।
वाक्ये तत्त्वमसीत्यत्र त्वं पदार्थं विवेचय ॥ १ ॥
न त्वं देहोऽसि दृश्यत्वात् उपजात्यादिमत्त्वतः ।
भौतिकत्वादशुद्धत्वादनित्यत्वात्तथैव च ॥ २ ॥
अदृश्यो रूपहीनस्त्वं जातिहीनोऽप्यभौतिकः ।
शुद्धनित्योऽसि दृग्रूपो घटो यद्वन्न दृग्भवेत् ॥३॥
न भवानिन्द्रियाण्येषां करणत्वेन या श्रुतिः ।
प्रेरकस्त्वं पृथक् तेभ्यो न कर्त्ता करणं भवेत् ॥ ४ ॥
नानैतान्येकरूपस्त्वं भिन्नस्तेभ्यः कुतः शृणु ।
न चैकेन्द्रियरूपस्त्वं सर्व्वत्राहं प्रतीतितः ॥ ५ ॥
न तेषां समुदायोऽसि तेषामन्यतमस्य च ।
विनाशेऽप्यात्मधीस्तावदस्ति सा नैवमन्यथा ॥ ६ ॥

प्रत्येकमपि नान्यात्मा नैव तत्र नयं शृणु ।
नानास्वामिकदेहोऽयं नश्येद्भिन्नमताश्रयः ॥ ७ ॥
नानात्माभिमतं नैव विरुद्धविषयत्वतः ।
स्वाम्यैक्ये तु व्यवस्था स्यादेकपार्थिवदेशवत् ॥ ८ ॥
न मनस्त्वं न वा प्राणो जड़त्वादेव चैतयोः ।
गतमन्यत्र मे चित्तमित्यन्यत्वानुभूतितः ॥ ९ ॥
क्षुत्तृड्भ्यां पीड़ितः प्राणो ममायञ्चेति भेदतः ।
तयोर्द्रष्टा पृथक् ताभ्यां घटद्रष्टा घटाद्यथा ॥ १० ॥
सुप्तौ लीनास्ति या बोधे सर्व्वं व्याप्नोति देहकम् ।
चिच्छायया च सम्बन्धा न सा बुद्धिर्भवान् द्विज ॥ ११ ॥
नानारूपवती बोधे सुप्तौ लीनातिचञ्चला ।
यतो दृगेकरूपस्त्वं पृथक् तस्य प्रकाशकः ॥ १२ ॥
सुप्तौ देहाद्यभावेऽपि साक्षी तेषां भवान् यतः ।
स्वानुभूतिस्वरूपत्वान्नान्यस्तस्यास्ति भासकः ॥ १३ ॥
प्रमाणं बोधयन्तन्तं बोधं मानेन ये जनाः ।
बुभुत्सन्ते ते एधोभिर्दग्धुं वाञ्छन्ति पावकम् ॥ १४ ॥
विश्वमात्मानुभवति तेनासौ नानुभूयते ।
विश्वं प्रकाशयत्यात्मा तेनासौ न प्रकाश्यते ॥ १५ ॥
ईदृशं तादृशं नोयं न परोक्षं सदैव यत् ।
तद्ब्रह्म त्वं न देहादिदृश्यरूपोऽसि सर्व्वदृक् ॥ १६ ॥
इदन्तु नैव यद्भाति सर्व्वं तच्च निषिध्यते ।
अवाच्यतत्त्वमनिदं न वेद्यं स्वप्रकाशतः ॥ १७ ॥
सत्यं ज्ञानमनन्तञ्च ब्रह्मलक्षणमुच्यते ।

सत्यत्वात् ज्ञानरूपत्वादनन्तत्वात्त्वमेव हि ॥ १८ ॥
सति देहाद्युपाधौ स्याज्जीवस्तस्य नियामकः ।
ईश्वरः स्यात्तदुपाधित्वाद्द्वयोर्बाधे स्वयंप्रभः ॥ १९ ॥
अपेक्ष्यतेऽखिलैर्मानैर्नयन्मानमीक्षते ।
वेदवाक्यं प्रमाणं तत् ब्रह्मात्मावगतो मतम् ॥ २० ॥
अतोहि तत्त्वमस्यादिवेदवाक्यप्रमाणतः ।
ब्रह्मणोऽस्ति यया युक्त्या सम्यगस्माभिः कीर्त्त्यते ॥ २१ ॥
शोधिते त्वं पदार्थे हि तत्त्वमस्यादि चिन्तितम् ।
सम्भवेन्नान्यथा तस्माच्छोधनं कृतमादितः ॥ २२ ॥
देहेन्द्रियादिधर्म्मान्यः स्वात्मन्यारोपयन् मृषा ।
कर्त्तृत्वाद्यभिमानी च वाच्यार्थस्त्वं पदस्य च ॥ २३ ॥
देहेन्द्रियादिसाक्षी यस्तेभ्यो भाति विलक्षणः ।
स्वयं बोधस्वरूपत्वाल्लक्ष्यार्थस्त्वं पदस्य सः ॥ २४ ॥
वेदान्तवाक्यसंवेद्यविश्वातीताक्षराद्वयम् ।
विशुद्धं यत् स्वसंवेद्यं लक्ष्यार्थस्तत्पदस्य सः ॥ २५ ॥
सामान्याधिकरण्यं हि पदयोस्तत्त्वमोर्द्वयोः ।
सम्बन्धस्तेन वेदान्तैर्ब्रह्मैक्यं प्रतिपाद्यते ॥ २६ ॥
भिन्नप्रवृत्तिहेतुत्वे पदयोरेकवस्तुनि ।
वृत्तित्वं यत्तयैवैक्यं विभक्त्यन्तकयोस्तयोः ॥ २७ ॥
सामानाधिकरण्यं तत्सम्प्रदायिभिरीरितम् ।
तथा पदार्थयोरेव विशेषणविशेष्यता ॥ २८ ॥
अयं सः सोऽयमितिवत् सम्बन्धो भवति द्वयोः ।
प्रत्यक्त्वं सद्वितीयत्वपरोक्षत्वञ्च पूर्णता ॥ २९ ॥

परस्परविरुद्धं स्यात्ततो भवति लक्षणा ।
लक्ष्यलक्षणसम्बन्धपदार्थप्रत्यगात्मनोः ॥ ३० ॥
मानान्तरोपरोधाच्च मुख्यार्थस्यापरिग्रहे ।
मुख्यार्थस्य विना भूते प्रवृत्तिर्लक्षणोच्यते ॥ ३१ ॥
त्रिविधा लक्षणा ज्ञेया जहत्यजहती तथा ।
अन्योभयात्मिका ज्ञेया तत्राद्या नैव सम्भवेत् ॥ ३२ ॥
वाच्यार्थमखिलं त्यक्त्वा वृत्तिः स्याद्या तदन्विते ।
गङ्गायां घोष इतिवज्जहती लक्षणा हि सा ॥ ३३ ॥
वाच्यार्थस्यैकदेशस्य प्रकृते त्याग इष्यते ।
जहती सम्भवेन्नैव सम्प्रदायविरोधतः ॥ ३४ ॥
वाच्यार्थमपरित्यज्य वृत्तिरन्यार्थके तु या ।
कथितेयमजहती शोणोऽयं धावतीतिवत् ॥ ३५ ॥
न सम्भवति साप्यत्र वाच्यार्थेति विरोधतः ।
विरोधांशपरित्यागो दृश्यते प्रकृतेर्यतः ॥ ३६ ॥
वाच्यार्थस्यैकदेशञ्च परित्यज्यैकदेशकम् ।
या बोधयति सा ज्ञेया तृतीया भागलक्षणा ॥ ३७ ॥
सोऽहं विप्र इदं वाक्यं बोधयत्यादितो यथा ।
तत्कालत्वविशिष्टञ्च तथैतत्कालसंयुतम् ॥ ३८ ॥
अतस्तयोर्विरुद्धं तत्तत्कालत्वादिधर्मकम् ।
त्यक्त्वा वाक्यं यथा विप्र पिण्डं बोधयतीरितम् ।
तथैव प्रकृतेस्तत्त्वमसीत्यत्र श्रुतौ शृणु ॥ ३९ ॥
प्रत्यक्त्वादीन् परित्यज्य जीवधर्मांस्त्वमःपदात् ।
सर्वज्ञत्वपरोक्षादीन् परित्यज्य ततः पदात् ॥ ४० ॥

शुद्धं कूटस्थमद्वैतं बोधयत्यादरात् परम् ।
त्वम्सोः पदयोरैक्यमेव तत्त्वमसीत्यलम् ॥ ४१ ॥
इत्थमैक्यावबोधेन सम्यक्ज्ञानं दृढं नयैः ।
अहं ब्रह्मेति विज्ञानं यस्य शोकं तरत्यसौ ॥ ४२ ॥
आत्मा प्रकाशमानोऽपि महावाक्यैस्तथैकता ।
तत्त्वमोर्बोध्यतेऽथापि पौर्वापर्य्यानुसारतः ॥ ४३ ॥
तथापि शक्यते नैव श्रीगुरोः करुणां विना ।
अपरोक्षयितुं लोके मूढैः पण्डितमानिभिः ॥ ४४ ॥
अन्तःकरणसंशुद्धौ स्वयं ज्ञानं प्रकाशते ।
वेदवाक्यैरतः किं स्याद्गुरुणेति न साम्प्रतम् ॥ ४५ ॥
आचार्य्यवान् पुरुषो हि वेदेत्येवं श्रुतिर्ज्जगौ ।
अनादाविह संसारे बोधको गुरुरेव हि ॥ ४६ ॥
अतो ब्रह्मात्मवस्त्वैक्यं ज्ञात्वा दृश्यमसत्तया ।
अद्वैते ब्रह्मणि स्थेयं प्रत्यग्ब्रह्मात्मना सदा ॥ ४७ ॥
तत्प्रत्यक्षात् परिज्ञातमद्वैतब्रह्मचिद्घनम् ।
प्रतिपाद्यं तदेवात्र वेदान्तैर्न द्वयं जड़म् ॥ ४८ ॥
सुखरूपं चिदद्वैतं दुःखरूपमसज्जड़म् ।
वेदान्तैस्तद्द्वयं सम्यक् निर्णीतं वस्तुतो नयात् ॥४९ ॥
अद्वैतमेवं सत्यं त्वं विद्धि द्वैतमसत् सदा ।
शुद्धे कथमशुद्धः स्यात् दृश्यं मायामयं ततः ॥ ५० ॥
शुक्तौ रूप्यं मृषा यद्वत् तथा विश्वं परात्मनि ।
विद्यते न खतः सत्त्वं नासतः सत्त्वमस्ति वा ॥ ५१ ॥

बाध्यत्वान्नैव सद्‌द्वैतं नासत् प्रत्यक्षभानतः ।
न च सत् सद्विरुद्धत्वादतोऽनिर्व्वाच्यमेव तत् ॥ ५२ ॥
यः पूर्व्वमेकएवासीत् सृष्ट्वा पश्चादिदं जगत् ।
प्रविष्टो जीवरूपेण सएवात्मा भवान् परः ॥ ५३ ॥
सच्चिदानन्द एव त्वं विस्मृत्यात्मतया परम् ।
जीवभावमनुप्राप्तः सएवात्मासि बोधतः ।
अद्वयानन्दचिन्मात्रः शुद्धः साम्राज्यमागतः ॥ ५४ ॥
कर्तृत्वादीनि यान्यासंस्त्वयि ब्रह्मद्वये परे ।
तानीदानीं विचार्य्य त्वं किंस्वरूपाणि वस्तुतः ॥ ५५
अत्रैव शृणु वृत्तान्तमपूर्व्वं श्रुतिभाषितम् ।
कश्चिद् गान्धारदेशीयमहारत्नविभूषितः ॥ ५६ ॥
स्वगृहे स्वाङ्गणे सुप्तः प्रमत्तः सन् कदाचन ।
रात्रौ चौरः समागत्य भूषणानां प्रलोभितः ॥ ५७ ॥
बद्ध्वा देशान्तरं चौरैर्नीतः सन् गहने वने ॥
भूषणान्यपहृत्यापि बद्धाक्षकरपादकः ॥ ५८ ॥
निक्षिप्तो विपिनेऽतीव कुशकण्टकवृश्चिकैः ।
व्यालव्याघ्रादिभिश्चैव सङ्कुलतरुसङ्कटे ॥ ५९ ॥
व्यालादिदुष्टसत्वेभ्यो महारण्ये भयातुरः ।
शिलाकण्टकदर्भाद्यैर्देहस्य प्रतिकूलकैः ॥ ६० ॥
क्रियमाणे विलुठने विशीर्णाङ्गोऽसमर्थकः ।
क्षुत्तृषातपवायुग्न्यादिभिस्तप्तोऽतितापकैः ॥ ६१ ॥
बन्धमुक्तौ तथा देशप्राप्तावेव सुदुःखधीः ।
ददर्श कञ्चिन्माक्रोशनैकं तत्रैव तस्थिवान् ॥ ६२ ॥

तथा रागादिभिः सर्गैः शत्रुभिर्दुःखदायिभिः ।
चौरैर्देहाभिमानाद्यैः स्वानन्दधनहारिभिः ॥ ६३ ॥
ब्रह्मानन्दे प्रमत्तः स्वाज्ञाननिद्रावशीकृतः ।
बन्धस्त्वं बन्धनैर्भोगतृष्णाज्वरादिभिर्दृढः ॥ ६४ ॥
अद्वयानन्दरूपात्त्वां प्रच्याव्यातीवधूर्त्तकैः ।
दूरनीतोऽसि देहेषु संसारारण्यभूमिषु ॥ ६५ ॥
सर्व्वदुःखनिदानेषु शरीरादिलयेषु च ।
नानायोनिषु कर्म्मान्धवासनानिर्मितासु च ॥ ६६ ॥
प्रवेशितो विसृष्टोऽसि बन्धस्वानन्दहारितः ।
अनादिकालमारभ्य दुःखञ्चानुभवन् सदा ॥ ६७ ॥
जन्ममृत्युजरादोषनरकादिपरम्पराम् ।
निरन्तरं विषण्णोऽनुभवन्नत्यन्तशोचवान् ॥ ६८ ॥
अविद्याभूतबन्धस्य निवृत्तौ दुःखवृत्तेश्च च ।
स्वरूपानन्दसंप्राप्तौ सत्योपायो न लब्धवान् ॥ ६९ ॥
यथा गान्धारदेशीयश्चिरं दैवाद्दयालुभिः ।
कैश्चित् पान्थैः परिप्राप्तैर्मुक्तदृष्ट्यादिबन्धनः ॥ ७० ॥
सः स्वस्यैरुपदिष्टश्च पण्डितो निश्चिताध्वकः ।
ग्रामाद्ग्रामान्तरं गच्छन्मेधावी मार्गतत्परः ॥ ७१ ॥
गत्वा गान्धारदेशं स स्वगृहं प्राप्य पूर्व्ववत् ।
बान्धवैः संपरिष्वक्तः सुखी भूत्वा स्थितोऽभवत् ॥ ७२ ॥
त्वमप्येवमनेकेषु दुःखदायिषु जन्मसु ।
भ्रान्तो दैवाच्छुभे मार्गे जातश्रद्धः सुकर्म्मकृत् ॥ ७३ ॥
वर्णाश्रमाचारपरोऽवाप्तपुण्यमहोदयः ।

ईश्वरानुग्रहाल्लब्धो ब्रह्मवित् गुरुसत्तमः ॥ ७४ ॥
विधिवत् कृतसंन्यासो विवेकादियुतः सुधीः ।
प्राप्तो ब्रह्मोपदेशोऽद्य वैराग्याभासन्नः परम् ॥ ७५ ॥
पण्डितस्तत्र मेधावी युक्त्या वस्तु विचारयन् ।
निदिध्यासनसम्पन्नः प्राप्तो हि त्वं परम्पदम् ॥ ७६ ॥
अतो ब्रह्मात्मविज्ञानं उपदिष्टं यथाविधि ।
मयाचार्य्येण ते धीर सम्यक् तत्र प्रयत्नवान् ॥ ७७ ॥
भूत्वा विमुक्तबन्धस्त्वं छिन्नद्वैतात्मसंशयः ।
निर्द्वन्द्वो निस्पृहो भूत्वा विचरस्व यथासुखम् ॥ ७८ ॥
वस्तुतो निष्प्रपञ्चोऽसि नित्यमुक्तः स्वभावतः ।
न ते बन्धविमोक्षौ स्तः कल्पितौ तौ यतस्त्वयि ॥ ७९ ॥
न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ८० ॥
श्रुतिसिद्धान्तसारोयं तथैव त्वं स्वया धिया ।
संविचार्य्य निदिध्यास्य निजानन्दात्मकं परम् ॥ ८१ ॥
साक्षात्कृत्वा परिच्छिन्नाद्वैतब्रह्माक्षरं स्वयम् ।
जीवन्नेव विनिर्मुक्तो विश्रान्तशान्तिमाश्रय ॥ ८२ ॥
विचारणीया वेदान्ता वन्दनीयो गुरुः सदा ।
गुरूणां वचनं पथ्यं दर्शनं सेवनं नृणाम् ॥ ८३ ॥
गुरुर्ब्रह्म स्वयं साक्षात् सेव्यो वन्द्यो मुमुक्षुभिः ।
नोद्वेजनीय एवायं कृतज्ञेन विवेकिना ॥ ८४ ॥
यावदायुस्त्वयो वन्द्यो वेदान्तो गुरुरीश्वरः ।
मनसा कर्म्मणा वाचा श्रुतिरेवैष निश्चयः ॥ ८५ ॥

भावाद्वैतं सदा कुर्य्यात् क्रियाद्वैतं न कर्हिचित् ।
अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह ॥ ८६ ॥
इत्येवं बोधितो ब्रह्मामृतबोधात्मना द्विजः ।
गुरुणा भाष्यकारेण मण्डनाख्यकविर्महान् ॥ ८७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य-श्रीमच्छङ्कर-
भगवत्कृततत्त्वोपदेशः समाप्तः ।